जगदिति कर्तृवाचकपदाध्याहाररूपशाब्दानुपपत्त्यपेक्षया परस्परव्याघातरूपार्थिकानुपपत्तेः प्राबल्यात्। तत् ब्रह्म नेजति न बिभेति।

ननु पूर्वमनेजत् इत्युक्तत्वात् तन्नेजतीत्यनेन पौनरुक्त्यमिति चेन्न। 'पौनरुक्त्यं पुनः प्रोक्तं विना यत्र प्रयोजनम्' इत्युक्तत्वाद् यत्र प्रयोजनं विना पूर्वोक्तमेव पुनरुच्यते तत्रैव पौनरुक्त्यस्य दोषत्वादत्र तदेजतीत्येतावन्मात्रोक्तौ ब्रह्म बिभेतीत्यन्यथाप्रतीतिर्भवति। तन्नेजतीत्युक्तौ तु तदेजति तन्नेजतीत्यनयोः परस्परं व्याघातो भवेदिति व्याघातवारणाय तदित्यव्ययं पञ्चम्यर्थेऽङ्गीकृत्य जगदिति [१३](कर्त्रध्याहारेण) जगत् ब्रह्मणो बिभेतीत्यर्थो वक्तव्यः।

'ततो बिभेति सर्वोऽपि न बिभेति हरिः स्वयम्।
सर्वगत्वात्स दूरे च बाह्येऽन्तश्च समीपगः॥'

इति तत्वसंहितायामुक्तत्वादिति निरुक्तान्यथाप्रतीतिनिरासरूपप्रयोजनसद्भावान्नात्र पौनरुक्त्यं दोषः। तत् ब्रह्म दूरे, अज्ञानामिति शेषः। तदु तदेव ब्रह्म अन्तिके समीपे वर्तते, ज्ञानिनामिति शेषः। यद्वा 'सर्वगत्वात्स दूरे च' इत्यादिवचनात् सर्वगतत्वेन तद् ब्रह्म सर्वेषां दूरे अन्तिके च वर्तत इत्यर्थः।

---

१३. कृत्याध्याहारेण

अत्र केचिदाशङ्क्य समादधते । ननु 'तद्दूरे तद्वन्तिके' इत्यत्र दूरान्तिकयोर्विरोधात्परस्परं व्याघात इति चेन्न । शुद्धब्रह्मणो वाङ्मनसागोचरत्वेन दूरत्वम्, सोपाधिकस्य विष्णुब्रह्मरुद्रात्मक-ब्रह्मणः समीपस्थत्वस्य च विवक्षणादिति । [१४](तत्तु अवधारणार्थकोकारेण) निरस्तम् । तत् ब्रह्म सर्वस्यास्य जगतः अन्तः वर्तते । तदु तदेव ब्रह्म सर्वस्यास्य जगतः बाह्यतः बहिरपि वर्तते । सर्वव्यापित्वादिति भावः । उकारप्रयोजनं पूर्ववत् ॥ ५ ॥

**उपनिषत्**

**यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति ।**
**सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥ ६ ॥**

**प्रभा**

अथ परमात्मनः सर्वगतत्वज्ञाने फलमाह- **यस्त्विति** ॥ योऽधिकारी सर्वाणि भूतानि चिदचिदात्मकजगन्ति आत्मन्येव परमात्मन्येव । परमात्माश्रयत्वेनेति यावत् । अनु निःसंशयं यथा तथा । आश्रितत्वक्रमानुरोधेन वा । पश्यति जानाति । किञ्चेति चार्थः । सर्वभूतेषु सकलजगत्सु नियन्तृतयाऽवस्थितम् आत्मानं हरिम् । अनुपश्यतीत्यस्य देहलीदीपन्यायेनात्र पूर्वत्राप्यन्वयः । स इति शेषः । ततः पररूपज्ञानित्वाद्धेतोः न विजुगुप्सते । आत्मानं

---

१४. तत्वावधारणाकारेण

गोप्तुं नेच्छति । भयाभावादिति भावः । उक्तं च सौकरायणश्रुतौ-

'सर्वगं परमात्मानं सर्वं च परमात्मनि ।
यः पश्येत्स भयाभावान्नात्मानं गोप्तुमिच्छति ।।' इति ।

अत्र केचित् परमात्मजगतोरभेदेन यः परमात्मनि सर्वभूतैक्यं सर्वभूतेषु परमात्मैक्यं च जानाति स स्वात्मानं गोप्तुं नेच्छतीत्यर्थ इत्याहुः । तन्न । भेदस्थल एवाऽऽधाराधेयभावस्य दृष्टत्वेनाभेदाङ्गीकारे त्वाधाराधेयभावबोधकसप्तम्यनुपपत्तेः ।। ६ ।।

**उपनिषत्**

**यस्मिन् सर्वाणि भूतान्यात्मैवाभूद् विजानतः ।**
**तत्र को मोहः कः शोक एकत्वमनुपश्यतः ।। ७ ।।**

**प्रभा**

ननु सर्वभूताश्रयतया सर्वभूतनियन्तृतया च परमात्मानं जानतः स्वात्मगोपनं नास्तीत्येतावतोक्तम् । परमात्मज्ञानिनोऽपि स्वात्मगोपनकारणीभूतशोकमोहयोः सत्वेन कथमेतदित्यतः परमात्मानं विशेषेण जानतः शोकमोहावपि न स्त इति पूर्वोक्तानुवादपूर्वकमाह- **यस्मिन्निति** ।। यस्मिन् परमात्मनि सर्वाणि भूतानि, तिष्ठन्तीति शेषः । आत्मैव परमात्मैव तत्र सर्वभूतेषु अभूत् । अनादितो वर्तते । क्रियाप्रबन्धे लुङ् इति । वि विशेषेण जानतः।

तत्रेत्यस्याऽवृत्तिः । सर्वभूतस्थितपरमात्मनि । एकत्वम् ऐक्यम् । एक एव परमात्मा सर्वत्र व्याप्त इति यावत् । अनुपश्यतः जानतः को मोहः कः शोकः । न कोऽपीत्यर्थः । उक्तं च पिप्पलादश्रुतौ-

'यस्मिन् सर्वाणि भूतानि स आत्मा सर्वभूतगः ।
एवं सर्वत्र यो विष्णुं पश्येत्तस्य विजानतः ।
को मोहः कोऽथवा शोकः स विष्णुं पर्यगाद् यतः ॥' इति ।

अत्र केचित्- 'यस्मिन् ब्रह्मणि सर्वभूतानि तिष्ठन्ति स परमात्मा आत्मैव जीव एवाभूदिति जीवेश्वराभेदबोधिकेयं श्रुतिरिति' व्याचक्षते । तन्न । निरुक्तश्रुत्यर्थविरोधात् । नापि पूर्वमन्त्रार्थेनात्र पौनरुक्त्याशङ्का । पूर्वोक्तार्थानुवादकत्वात् । अनुवादप्रयोजनं तु परमात्मानं विजानतः स्वगोपनकारणीभूतशोकमोहौ न स्त इत्यधिकविधानम् ।

यद्वा पूर्वमन्त्रे सामान्यतः सर्वभूताश्रयत्वेन सर्वभूतेषु नियन्तृतया स्थितत्वेन परमात्मानं जानतः [१५](स्वगोपनाभाव)रूपफलमुक्तम् । अत्र तु निरुक्तरीत्या परमात्मानं विशेषेण जानतः स्वगोपनप्रयोजकीभूतशोकमोहावपि न स्त इति विशेषफलमुक्तमिति न पौनरुक्त्यम् ॥ ७ ॥

---

१५. स्वगोपवनरूप

## उपनिषत्

**स पर्यगाच्छुक्रमकायमव्रण-**

**मस्नाविरꣳ शुद्धमपापविद्धम् ।**

**कविर्मनीषी परिभूः स्वयम्भूर्याथा-**

**तथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥ ८ ॥**

## प्रभा

ननु कथं भगवज्ज्ञानमात्रेण शोकमोहाभाव इत्यत आह- **स पर्यगादिति** ॥ परमात्मानमिति शेषः । 'स विष्णुं पर्यगाद् यत' इति श्रुतेः । सः ज्ञानी यतः परमात्मानं पर्यगात् प्राप्नोत् ततः शोको मोहश्च नास्तीत्यर्थः । ननु परमात्मप्राप्तिमात्रेण कथं शोकाद्यभाव इत्यत आह- **शुक्रमिति** ॥ ब्रह्मविशेषणम् । शुचं शोकं रहति त्यजति [१६]रहयति त्याजयतीति च शुक्र इति व्युत्पत्या सर्वस्य शोकनाशकः स्वयं शोकरहितश्च परमात्मा यतोऽतस्तं प्राप्तस्य शोको नास्तीति भावः । उक्तं च 'शुक्रं तच्छोकराहित्यात्' इति वाराहे । ननु यस्य देहस्तस्य शोक इति व्याप्तेर्दृष्टत्वात् परमात्मनोऽपि देहसद्भावात्कथं शोकाभाव इत्यत आह- **अकायमिति** ॥ 'अकायं लिङ्गवर्जनाद्' इत्युक्तेः कं सुखमयते प्राप्नोतीति कायो लिङ्गदेहः । न विद्यमानः कायो यस्येत्यकायमिति व्युत्पत्या शोकमूललिङ्गदेहराहित्यात्तस्य शोको नास्तीति भावः ।

---

१६. राहयति इति स्यात् ।

ननु कं सुखम् अयते प्राप्नोतीति व्युत्पत्या स्वरूपदेहस्यापि कायशब्दवाच्यत्वात्कथं लिङ्गदेहस्यैव कायशब्दवाच्यत्वमिति चेन्न । अलब्धलाभस्यैव प्राप्तिशब्दार्थत्वेन स्वरूपदेहस्य सर्वदा सुखरूपत्वात्स्वरूपदेहावच्छेदेन निरुक्तसुखप्राप्त्यभावात् । ननु तर्हि परमात्मनोऽल्पत्वेनाल्पं प्राप्तस्य शोकाद्यभावो लोकविरुद्ध इत्यत आह- **अव्रणमिति** ॥ देशतः कालतो गुणतश्चेति शेषः । व्रण सञ्चूर्णन इत्यस्माद्धातुपाठात् स्तोको व्रणः, देशतः कालतः गुणतश्चास्तोकत्वादव्रणम् । 'अव्रणं नित्यपूर्णतः' इति स्मृतेः । 'अनाद्यनन्तं महतः परं ध्रुवम्' (कठ.३.१५), 'अणोरणीयान् महतो महीयान्' (कठ.२.२०), 'अम्भस्यपारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान्' (तै.आ.१०.१.१., म.ना.१.१), 'शुक्रेण ज्योतींषि समनुप्रविष्टः प्रजापतिश्चरति गर्भे अन्तः' (म.ना.१.१) इत्यादिश्रुतिभ्यश्च ।

ननु कथं लिङ्गदेहराहित्यं शोकराहित्ये हेतुः । अन्धन्तमःस्थितानां लिङ्गदेहराहित्येऽपि नित्यदुःखदर्शनादित्यत आह- **शुद्धमिति** ॥ 'पावनत्वात्सदा शुद्धम्' इत्युक्त्या पावित्र्यहेतुमित्यर्थः । लोके पापादिना अपवित्रस्यैव शोकादिदर्शनेनास्य परमात्मनः पावित्र्यहेतुत्वात्तस्य तं प्राप्तस्यापि शोकादिकं नास्तीति भावः । शुद्धत्वे हेतुमाह- **अपापविद्धमिति** ॥ पापलेपरहित-

मित्यर्थः । पापराहित्ये हेतुमाह- **अस्नाविरमिति** ॥ [१७](स्नावा मज्जा) ईरति प्रवर्तते यस्मिन्निति स्नाविरं स्थूलदेहम् । न विद्यमानं स्नाविरं स्थूलदेहं यस्येति तथोक्तम् । 'स्थूलदेहस्य राहित्याद-स्नाविरमुदाहृतम्' इति वचनात् । तथा च [१८](पापकरण)हेतु-भूतस्थूलदेहाभावात्पापमेव नास्ति पापाभावान्न पापलेपोऽपीति भावः । तथा चायमन्वयः । सः यतः अस्नाविरं अपापविद्धं शुद्धम् अकायम् अव्रणं शुक्रं तं परमात्मानं पर्यगात्ततः को मोहः कः शोक इति पूर्वेणान्वयः । यद्यपि कायशब्दः स्थूलदेहलिङ्गदेहसाधारणः । तथाऽप्यस्नाविरमिति पृथगुपादानेन कायशब्दस्य लिङ्गशरीरमात्र-परत्वम् ।

ननु लोके घटादिसृष्टेः शरीरान्वयव्यतिरेकदर्शनादकाय-मित्यादिना परमात्मनः शरीराभावस्योक्तत्वात्कथं तस्य सृष्ट्यादिकर्तृत्वं घटते । न च शुक्तिकायां रजतमिव परमात्मनि जगदारोपितमेवातस्तस्य न शरीरापेक्षेति वाच्यम् । बाधकाभावेन जगतः सत्यत्वनिश्चयात् । 'याथातथ्यतोऽर्थान्' इति वचन-विरोधाच्च ।

न च यदा जगत्सृष्टिस्तदा स्वेच्छया देहवत्त्वं यदा देहाभावस्तदा जगत्सृष्टिरपि नास्तीति कालभेदेन व्यवस्थीयत इति वाच्यम् ।

---

१७. स्नावज्जा १८. पापाकारण....

'शाश्वतीभ्यः समाभ्यः' इत्यनेन जगत्सृष्टेः प्रवाहतोऽनाद्यनन्त-कालीनत्वनिश्चयात्तस्य प्राकृतदेहाभावेऽपि ज्ञानानन्दात्मक देहोऽस्तीत्याह- **कविरिति** ॥ 'को ब्रह्मात्मानिलार्काग्निचित्त-धीयमकेकिषु । [१९]विष्णाहतशब्देश्चौसितवर्णेवसौद्युतौ । कं शिरोम्बुसुखे क्लीबम्' इत्यभिधानात् कं धियं वयति सर्वत्र प्रापय-तीति कविः सर्वज्ञ इत्यर्थः । 'एवंभूतोऽपि सार्वज्ञात्कविरित्येव शब्दितः' इति वचनात् । कं ज्ञानरूपमानन्दरूपं च शिरः वयति सततं प्राप्नोतीति वा । 'विश्चक्षुषि व्योम्नि वाते परमात्मनि पक्षिणि । देहे पादे भुजे विघ्नराजे शीर्षेऽपि चोच्यत' इति कोशात् कं ज्ञानानन्दरूपं विःशिरोबाहुर्देहः पादो वा यस्येति वा कविः । कोपपदादन्तर्णीतण्यर्थाद् वा शुद्धाद् वा वयतेः कर्तरि इः । उक्तं च वाराहे-

'सजूज्ञानानन्दशीर्षोऽसौ सजूज्ञानानन्दबाहुकः ।
सजूज्ञानानन्ददेहश्च सजूज्ञानानन्दपादवान् ॥' इति ।

तथा च जडशरीराभावेऽपि ज्ञानानन्दात्मकशरीरसत्वाज्जग-त्सृष्ट्यादिकर्तृत्वं घटत इति भावः । ननु जगत्सृष्टिकर्तृत्वस्य चतुर्मुखब्रह्मण्येव प्रसिध्या परब्रह्मणः [२०](सृष्टिकर्तृत्वाभावेन) कुतः

---

१९. 'विष्णौ हताशे दक्षे चासितवर्णे...' इति स्यात् ।

२०. सृष्टिकर्तृत्वेन

शरीरापेक्षेति चेदत आह- **मनीषीति** ॥ 'ब्रह्मादिसर्वमनसां प्रकृत्याः मनसोऽपि च । ईशतृत्वान्मनीषी सः' इत्युक्तेर्ब्रह्मादि-सर्वमनःप्रेरकत्वेन मनीषीत्यर्थः । तथा च सर्वमनःप्रेरकत्वेन मुख्य-तया सृष्ट्याद्यष्टकर्तृत्वं परमात्मन एवातो देहापेक्षेति भावः । अथ जगत्सृष्ट्यादिकर्तृत्वं सर्वोत्तमस्यैव घटते नान्यस्येत्यतोऽस्य सर्वोत्तमत्वमाह- **परिभूरिति** ॥ 'परिभूः सर्वतो वरः' इत्युक्तेः । परिभवति तिरस्करोति सर्वमिति वशे करोति सर्वमिति वा परिभूः सर्वोत्तम इत्यर्थः । अन्यापेक्षारहितस्यैव सर्वोत्तमत्वादिकं घटते नान्यस्येत्यस्य सदानन्याश्रयत्वमप्यस्तीत्याह- **स्वयम्भूरिति** ॥ स्वयमेव परमनपेक्ष्य भवत्यां सृष्टौ कुतः शरीरापेक्षेति च परमात्मनः सृष्टिसमये स्वेच्छया देहोपादानमस्तु कुतः सदा देहवत्वं वक्त-व्यमिति च चोद्यं निरस्तम् । वस्तुतस्तु यथार्थपदार्थकर्मक-सत्यसृष्टेरनाद्यनन्तकालीनत्वलाभाय 'शाश्वतीभ्यः समाभ्यः' इत्यस्य [21](सर्जनक्रियाया)मेवान्वयो वाच्यः । पञ्चम्यर्थोऽवच्छेद-कत्वम् । अनाद्यनन्तकालावच्छेदेन ससर्जेत्यर्थः ।

न च 'स सत्यं जगदेतादृङ् नित्यमेव प्रवाहतः । अनाद्यनन्तकालेषु प्रवाहैकप्रकारतः । नियमेनैव ससृजे भगवान् पुरुषोत्तमः' इति 'एवंभूतो महाविष्णुर्यथार्थं जगदीदृशम् ।

---

२१. सर्पणक्रियायाम्

अनाद्यनन्तकालीनं ससर्जात्मेच्छया विभुः' इति भाष्योदाहृत-वाराहवचनानुसारेणोभयत्राप्यन्वय इति वाच्यम् । [२२]निरुक्तशङ्का-निवारणाति सर्वकार्येषु वर्तत इति स्वयम्भूः सदानन्याश्रय इत्यर्थः। 'सदानन्याश्रयत्वाच्च स्वयम्भूः परिकीर्तितः' इति वचनात् । एतादृशः परमात्मा याथातथ्यतः यथार्थत्वेन । सार्वविभक्ति-कस्तसिरित्युक्तत्वात्तृतीयार्थे तसिः । युक्तानिति शेषः । शाश्वतीभ्यः अनाद्यनन्तेभ्यः समाभ्यः संवत्सरेभ्यः, 'ल्यब्लोपे कर्मण्यधिकरणे च' (वार्तिकम् १.३.१९) इत्यनेनाधिकरणे पञ्चमी । अनाद्यनन्तसंवत्सरानाश्रित्येत्यर्थः । स्थितानिति शेषः । यद्वा सप्तम्यर्थे पञ्चमी । प्रवाहतोऽनाद्यनन्तकालीनानित्यर्थः । अर्थान् विषयान् । व्यदधात् ससृजे । 'याथातथ्यत' इत्यस्य 'शाश्वतीभ्यः समाभ्यः' इत्यस्य च अर्थेषु सर्जनक्रियायां चान्वयः। तेन असत्यस्य सृष्टौ कुतः शरीरापेक्षेति शुक्तिरूप्यादिवदसत्यायाः (जगत्सृष्टेः कथं प्रवाहतो नित्यत्वमित्यतो) जगत्सृष्टेः प्रवाहतोऽ-नाद्यनन्तत्वमस्तीत्यर्थे [२३](समाख्यातया) भाष्योदाहृतवाराहवचने जगन्निष्ठप्रवाहतो नित्यत्वस्याधिकस्योक्तत्वेन प्रकृतश्रुतौ तादृशार्थस्य प्रयोजनाभावात् श्रीमट्टीकाकृत्पादैः राघवेन्द्र-

२२. निरुक्तशङ्कानिवारणा(य स्वयमेव भव)ति सर्वकार्येषु ...., इति पाठः साधुरिति भाति ।

२३. समाख्यतया

श्रीमच्चरणैश्च शाश्वतीभ्यः समाभ्य इति पञ्चमीं सप्तम्यर्थेऽङ्गीकृत्यानाद्यनन्तसंवत्सरेषु वर्तमानानिति तस्य पदार्थेष्वन्वयः कृतः ।

अत्र केचित्, अनेजदित्याद्यतीतमन्त्रैर्यः सगुण आत्मा प्रतिपादितः सः स्वेन रूपेण किंलक्षणक इत्यपेक्षायामाह- **स पर्यगादिति ॥** सः परमात्मा पर्यगात् व्याप्तोऽभूदित्यर्थः । तथा च व्याप्तत्वं लक्षणम् । शुक्रमित्यादि परमात्मविशेषणमिति । तन्न । विशेष्यविशेषणवाचकपदयोः [२४](समानविभक्तिकत्वनियमेन) स इति विशेष्यवाचकपदस्य प्रथमान्तत्वेन शुक्रमित्यादेर्द्वितीयान्तत्वेन तदभावात् । न च विभक्तिविपरिणामः क्रियते । अथवा लिङ्गव्यत्ययः छान्दस इति वाच्यम् । गत्यन्तराभावस्थल एव विपरिणामादेर्युक्तत्वेनात्र सः ज्ञानी शुक्रादिरूपं भगवन्तं पर्यगात्प्राप्नोदित्यस्मद्रीत्या व्याख्यानेनैव निर्वाहे विपरिणामादेरयुक्तत्वात् । (यच्च) स्वयमेव सर्वं भवतीति स्वयम्भूः सर्वाभिन्न इत्यर्थ इति तदपि न । ब्रह्मादिसर्वमनःप्रेरकत्वरूपमनीषित्वोक्त्या सर्वोत्तमत्वस्ववशस्थसर्वत्वबोधकपरिभूशब्दवाच्यत्वोक्त्या च भेदस्यैव प्राप्तेः । न च 'धीरो मनीषी ज्ञः प्राज्ञः' इत्यभिधानेन मनीषीति शब्दस्य ज्ञानीत्यर्थ उच्यते । परितो भवति तिष्ठति इति परिभूर्व्याप्त इत्यर्थ उच्यत इति वाच्यम् । मनीषीत्यस्य कविरित्यनेन

---

२४. समानवित्वेनियमेन

परिभूरित्यस्य 'स पर्यगात्' इत्यनेन पौनरुक्त्यात् । 'ब्रह्मादिसर्वमनसाम्' इत्यादिवचनविरोधाच्च ॥ ८ ॥

## उपनिषत्

**अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते ।**
**ततो भूय इव ते तमो य उ विद्यायाꣳ रताः ॥ ९ ॥**

## प्रभा

एतावता यथावत्परमात्मज्ञानं मोक्षसाधनमित्युक्तम् । तत्तु ज्ञानं मिथ्याज्ञाननिन्दासहकृतमेव मोक्षसाधनं न केवलं भवतीत्याह- **अन्धन्तम इत्यादिमन्त्रत्रयेण** ॥ तत्र तावद्यथावज्ज्ञानस्येवान्यथाज्ञाननिन्दाया अप्यावश्यकत्वोपपादनाय पूर्वोक्तमन्यथाज्ञानस्यासुर्यादिलोकप्राप्तिसाधनत्वमनूद्यान्यथाज्ञाननिन्दायास्ततोऽप्यधिकानर्थसाधनत्वमाद्यमन्त्रेणोच्यते-**अन्धन्तम इति** ॥ अत्र विद्याविरोधिमिथ्याज्ञानवाचिनाऽविद्याशब्देन अन्यथाप्रकाररूपविषयो लक्ष्यते । ये जनाः अविद्याम् अन्यथाप्रकारम् उपासते ध्यायन्ति ते जनाः अन्धन्तमः प्रविशन्ति इत्यनुवादः । ये जनाः विद्यायां तत्त्वज्ञाने । उरवधारणे । तत्त्वज्ञान एव रताः । न मिथ्याज्ञाननिन्दका इति यावत् । ते जनाः ततः [२५]मिथ्याज्ञानं प्राप्य तमसः भूयः अधिकं तमः प्रविशन्तीत्यन्वयः । इवेति व्यक्तार्थो

---

२५. मिथ्याज्ञानप्राप्यतमसः इति स्यात् ।

निश्चयमित्यर्थः । उक्तं च कौर्मे-

'अन्यथोपासका ये तु तमोऽन्धं यान्त्यसंशयम् ।
ततोऽधिकमिव व्यक्तं यान्ति तेषामनिन्दकाः ॥' इति ।

केचित्तु मिथ्याज्ञानप्राप्यतमोऽपेक्षयाऽधिकमन्धतमसमेव नास्ति । तथापि मिथ्याज्ञानिनां तमसि यद्दुःखं वर्तते मिथ्याज्ञान-निन्दाऽसहकृततत्वज्ञाननिरतानां तदपेक्षयाऽधिकं दुःखं भवतीत्यर्थद्योतनायोपमानवाचकेवशब्दः । तथा च मिथ्याज्ञाननिन्दाया आवश्यकत्वे तात्पर्यमिति प्राहुः ॥ ९ ॥

## उपनिषत्

**अन्यदेवाहुर्विद्यया अन्यदाहुरविद्यया ।**
**इति शुश्रुम धीराणां ये नस्तद्[२६]विचचक्षिरे ॥ १० ॥**

## प्रभा

न केवलं विपक्षेऽनर्थप्राप्तेः सत्वेन यथार्थज्ञानाऽयथार्थज्ञान-निन्दयोः कर्तव्यत्वम् । किन्तु मोक्षफलस्यांशतः साधनत्वेनापि द्वयोरावश्यकत्वमित्याह- **अन्यदेवेति** ॥ विद्यया तत्वज्ञानेन अन्यदेव मोक्षैकदेशरूपफलमेव आहुः । वृद्धा इति शेषः । अविद्यया

---

२६. यद्यपि 'विचचक्षिरे' इति पाठः दृश्यते । तथापि प्राचीनतमतालपत्रेषु 'व्याचचक्षिरे' इत्येव पाठोऽस्तीति प्राज्ञाः प्राहुः ।

अन्यथाज्ञाननिन्दया अन्यत् मोक्षैकदेशं फलमाहुः वृद्धाः । ये नोऽस्मभ्यं तत् मोक्षसाधनं विचचक्षिरे व्याचक्षिरे तेषां धीराणां सकाशात् इति एवं रूपं वृद्धवचनं शुश्रुम श्रुतवन्तः । तस्मात्तद् द्वयमप्यावश्यकमिति भावः ॥ १० ॥

**उपनिषत्**

**विद्यां चाविद्यां च यस्तद्वेदोभयꣳ सह ।**
**अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥ ११ ॥**

अथ यत्तत्वज्ञानसाध्यमन्यथाज्ञाननिन्दासाध्यं च मोक्षैकदेश-रूपफलमुक्तं तत्कीदृशमित्याकाङ्क्षायां तत्स्वरूपं सूचयन्नुक्तमेवार्थं यो जानाति तस्याप्युभयसाध्यमोक्षो भवतीत्याह- **विद्यां चेति ॥** विद्यां याथात्म्यज्ञानम् । अविद्यां मिथ्याज्ञाननिन्दाम् । इतरेतरयोगे च शब्दौ । तदुभयं सह साकम् । एकपुरुषार्थहेतुत्वेनेति भावः । योऽधिकारी वेद जानीते सः अविद्यया अन्यथाज्ञाननिन्दया मृत्युं दुःखाद्यनिष्टं तीर्त्वा विद्यया विष्णोर्याथात्म्यज्ञानेन अमृतम् आनन्दानुभवलक्षणमोक्षैकदेशम् अश्नुते प्राप्नोति । तथा च अनिष्ट(नि)वृत्तिरूपमोक्षैकदेशफलमन्यथाज्ञाननिन्दया आनन्दा-नुभवलक्षणमोक्षैकदेशफलं तु तत्वज्ञानेन भवतीति ज्ञानमात्रेणापि निरुक्तोभयसाध्यनिरुक्तदलद्वयविशिष्टमोक्षो भवति । ततो [२७](निरुक्तोभयानुष्ठानेन) तादृशदलद्वययुक्तमोक्षो भवतीति किमु

२७. निरुक्तभयानुष्ठाने

वक्तव्यमित्याशयः । एवं च तदुभयस्याप्यवश्यकरणीयत्वे तात्पर्यम् । एतन्मन्त्रद्वयार्थोऽप्युक्तस्तत्रैव कौर्मे-

'तस्माद् यथास्वरूपं च नारायणमनामयम् ।
अयथार्थस्य निन्दां च ये विदुः सह सज्जनाः ।
ते निन्दयाऽयथार्थस्य दुःखाज्ञानादिरूपिणः ।
दुःखाज्ञानादिसन्तीर्णाः सुखज्ञानादिरूपिणः ।
यथार्थस्य परिज्ञानात्सुखज्ञानादिरूपतां यान्ति ॥' इति ।

केचित्तु- अविद्यापदं कर्मवाचकम् । तथा च ज्ञानकर्मणोर्मोक्षसाधनत्वमित्याहुः । तदसमञ्जसम् । एतन्मन्त्रत्रयार्थनिर्णायकनिरुक्तकौर्मवचनविरोधात् । अन्ये तु [२८]अविद्यापदमिन्द्रादिदेवताज्ञानवाचकमिति । तदपि न । तस्याप्रकृतत्वात् । न च 'कुर्वन्नेवेह कर्माणि' इति मन्त्रेऽज्ञस्य यज्ञादिकर्मविधानात्तस्य चेन्द्रादिदेवताकत्वेन देवताज्ञानमपि प्रकृतमेवेति वाच्यम् । तस्य निवृत्तकर्मविषयतया व्याख्यातत्वात् । निरुक्तवाक्यविरोधाच्च ॥ ११ ॥

**उपनिषत्**

**अन्धन्तमः प्रविशन्ति येऽसम्भूतिमुपासते ।**
**ततो भूय इव ते तमो य उ सम्भूत्याꣳ रताः ॥ १२ ॥**

---

२८. विद्यापदमिति पाठः साधीयान्

## प्रभा

अथ यदुक्तं मिथ्याज्ञानमन्धतमसहेतुस्तन्निन्दा मुक्तिसाधनमिति तत्कीदृशं मिथ्याज्ञानमित्याकाङ्क्षायां तस्यानेकविधत्वात् तत्रैकदेशं लक्षीकृत्य तस्यासुर्यादिलोकप्रापकत्वं तन्निन्दाया मोक्षसाधनत्वमस्तीत्यभिप्रायगर्भितं यथार्थज्ञानस्वरूपं तस्य मोक्षसाधनत्वं चाऽऽह- **अन्धन्तम** इत्यादिमन्त्रत्रयेण । ये जनाः असम्भूतिं कर्तृतासम्बन्धेनोत्पत्त्यभावम् । परमात्मन इति शेषः । उपासते ध्यायन्ति । सृष्ट्यकर्ता परमात्मेत्युपासत इति यावत् । ते जनाः अन्धं तमः प्रविशन्ति । ये जनाः सम्भूत्याम् उ कर्तृतासम्बन्धेन परमात्मनः सृष्टिज्ञान एव । सृष्टिकर्तृत्वमेव परमात्मनोऽस्तीति ज्ञान इति यावत् । रताः आसक्ताः । न तु परमात्मनः संहारकर्तृत्वज्ञाने रता इति भावः । ते जनाः ततः [२९](असम्भूति)ज्ञानप्राप्यतमसः भूयः अधिकं तमः प्रविशन्तीति पूर्वेणान्वयः । इवेत्यस्य पूर्ववदर्थः । उक्तं च तत्रैव-

'एवं सृष्ट्यादिकर्तृत्वं नाङ्गीकुर्वन्ति ये हरेः ।
तेऽपि यान्ति तमो घोरं तथा संहारकर्तृताम् ।
नाङ्गीकुर्वन्ति तेऽप्येवं तस्मात् सर्वगुणात्मकम् ।
सर्वकर्तारमीशेशं सर्वसंहारकारकम् ॥' इति ।

२९. सम्भूति....

अत्रावधारणार्थकोशब्दो ये सृष्टयकर्तृत्वज्ञानरूपमिथ्याज्ञाननिन्दायामरतास्तेऽप्यन्धं तमो यान्तीत्यभिप्रायगर्भितः ॥ १२ ॥

**उपनिषत्**

**अन्यदेवाहुः सम्भवादन्यदाहुरसम्भवात् ।**
**इति शुश्रुम धीराणां ये नस्तद्[३०]विचचक्षिरे ॥ १३ ॥**

**प्रभा**

न केवलं विपक्षेऽनर्थसत्वादेव हरेः सृष्टिकर्तृत्वं संहारकर्तृत्वं च ज्ञेयम् । किन्तु दलद्वययुक्तमोक्षोपयोगित्वादपीत्यर्थे वृद्धसम्मतिमाह- **अन्यदेवेति** ॥ सम्भवात् हरेः सृष्टिकर्तृत्वज्ञानात् । अन्यदेव मोक्षैकदेशफलमेवाहुः वृद्धा इति शेषः । असम्भवात् हरेः संहारकर्तृत्वज्ञानात् । अन्यत् मोक्षैकदेशं फलमाहुः । असम्भवपदं हरेः संहाराकर्तृत्वज्ञाननिन्दनान्मोक्षैकदेशं फलं भवतीत्यभिप्रायगर्भितम् । शिष्टं प्राग्वत् ॥ १३ ॥

**उपनिषत्**

**सम्भूतिं च विनाशं च यस्तद्वेदोभयं सह ।**
**विनाशेन मृत्युं तीर्त्वा सम्भूत्याऽमृतमश्नुते ॥ १४ ॥**

**प्रभा**

उक्तमेवार्थं विशदयन्नुपसंहरति- **सम्भूतिं चेति** ॥ हरेः

---

३०. पूर्ववदेव 'व्याचचक्षिरे' इति पाठो ज्ञेयः ।

सृष्टिकर्तृत्वमित्यर्थः । **विनाशं चेति** ॥ हरेः संहारकर्तृत्वमित्यर्थः । **विनाशेनेति** ॥ संहारकर्तृत्वज्ञानेनेत्यर्थः । **सम्भूत्येति** ॥ सृष्टिकर्तृत्वज्ञानादित्यर्थः । अन्वयः प्राग्वत् । यद्वा सहेति हेत्वर्थे । तथा च सह एकपुरुषार्थहेतुत्वात् सम्भूतिं हरेः सृष्टिकर्तृत्वं विनाशं च संहारकर्तृत्वं च योऽधिकारी वेद उपास्ते स इत्यन्वयः । शिष्टं पूर्ववत् । एवं च हरेः संहारकर्तृत्वज्ञानादखिलक्लेशनिवृत्तिः [३१](सृष्ट्युपलक्षित)सर्वगुणात्मकत्वज्ञानादानन्दानुभव इत्युभयदलविशिष्टमोक्षायोभयमप्यावश्यकमिति भावः । उक्तं च तत्रैव-

'तत्स्मात्सर्वगुणात्मकम् ।
सर्वकर्तारमीशेशं सर्वसंहारकारणम् ।
यो वेद संहृतिज्ञानाद् देहबन्धाद् विमुच्यते ।
सुखज्ञानादिकर्तृत्वज्ञानात् तद् व्यक्तिमाव्रजेत् ॥' इति ।

अत्र केचित्- न विद्यते सम्भूतिरुत्पत्तिर्यस्या इति विग्रहेणासम्भूतिपदस्य प्रकृतिवाचकत्वम् । सम्यक् भूतिरुत्पत्तिर्यस्येति व्युत्पत्या सम्भूतिपदस्य हिरण्यगर्भवाचकत्वम् । तथा च ये प्रकृतिमेवोपासते तेऽन्धन्तमो यान्ति । ये ब्रह्माणमेवोपासते तेऽपि ततोऽधिकतमो यान्ति अतः प्रकृतिं हिरण्यगर्भं चोपासीरन्निति तात्पर्यमित्याहुः । तन्न । सम्भूतिशब्दस्य हिरण्यगर्भवाचकत्वे

---

३१. सृष्ट्युपेक्षित....

सम्भूत्यामिति स्त्रीलिङ्गविरोधः । यदि स्त्रीलिङ्गत्वं छान्दसमिति वदसि तर्हि सम्भूतिं च विनाशं चेत्यत्र विनाशशब्दस्य संहारवाचकत्वेन तस्य [३२]प्रकृतानुयोगादसङ्गतेः । न च विशेषेण नाशो यस्माज्जगतो भवतीति व्युत्पत्या विनाशशब्दस्य हिरण्यगर्भ-वाचकत्वमङ्गीक्रियत इति वाच्यम् । सम्भूतिपदेन पौनरुक्त्यात् । अव्याकृतस्य प्रकृतत्वेन तद्बोधकपदाभावाच्च । न च 'वष्टि वागुरिरल्लोपमवाप्योरुपसर्गयोः । सर्वेषु वोपसर्गेषु छान्दसेषु पदेषु वा' इत्युक्तेः सम्भूतिपदस्य प्रकृतिवाचकत्वम् । विगतो नाशो यस्या इति व्युत्पत्या विनाशशब्दस्यैव प्रकृतिवाचकत्वं वा । नपुंसकत्वं छान्दसमिति वाच्यम् । आत्मज्ञाननिष्ठाया एवात्रोपक्रमोपसंहा-राभ्यां [३३]निर्णयितत्वेन प्रकृतिहिरण्यगर्भयोरप्रकृतत्वात् ।। १४ ।।

### उपनिषत्

**हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।**
**तत् त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ।। १५ ।।**

### प्रभा

एतावता प्रबन्धेन आद्यमन्त्रद्वयोक्तदिशा प्राप्ताधिकारं प्रति 'अनेजदेकम्' इत्यादिना भगवत्स्वरूपं निरूप्य तत्साक्षात्कारो

---

३२. प्रकृतानुपयोगादसङ्गतेः इति पाठः स्यात्

३३. निर्णेयत्वेन इति स्यात् ।

मोक्षहेतुरित्युक्तम् । स च साक्षात्कारो न केवलं श्रवणादिकेन भवति । नापि मोक्षो भगवत्साक्षात्कारमात्रेण । किन्तु भगवत्-प्रसादसहकृतेनैवेत्यतोऽनुष्ठितश्रवणादिकेनापि साक्षात्कारार्थं प्राप्त-साक्षात्कारस्य च मोक्षार्थं भगवत्प्रार्थना कर्तव्येति भावेन प्रार्थनाप्रकारमाह- **हिरण्मयेनेत्यादिसमस्तोपनिषदा ॥** तत्रादौ साक्षात्कारार्थं कर्तव्यसूर्यप्रतीकस्थभगवत्प्रार्थनाप्रकारमाह- **हिरण्मयेनेत्यादि ॥** हिरण्मयमिव हिरण्मयं ज्योतिर्मयम् । पिपर्ति पालयति रसानिति पम् । आ समन्तात् त्रायते जगदित्यात्रम् । पृ पालनपूरणयोरित्यस्माड्डप्रत्ययः । आ इत्युपसर्गपूर्वात् त्रैङ् पालन इत्यस्माद् डः । पश्च तदात्रं च पात्रम् । [३४]सकलरसन्तापूर्वक-जगद्रक्षणकारीत्यर्थः । तेन हिरण्मयेन पात्रेण सूर्यमण्डलेन । सत्यस्य सद्गुणपूर्णस्य विष्णोः । तवेत्यर्थः । मुखं वक्त्रम् । उपलक्षणं चैतत् । वपुश्चेत्यर्थः । यद्वा 'मुखं देहं समुद्दिष्टं यतः खन्यं सुखेच्छुभिः' इति 'सर्वत्र व्याप्तदेहत्वाद्विश्वतोमुख ईश्वरः' इति नामनिरुक्तावुक्तत्वान्मुखशब्दो देहवाची । 'खनु अवदारण' इत्यस्मात् [३५]अनुखनेर्मुड् चोदात्त इति कर्मणि उन् प्रत्ययः मुडागम श्चेत्युज्वलत्तः । अपिहितम् आच्छादितमस्तीति शेषः । हे पूषन् पूर्ण त्वं तत् देहम् । सत्यं भगवन्तं हृदये धारयतीति सत्यधर्मो

---

३४. 'सकलरसपालनपूर्वक' इति पाठः स्यात् ।

३५. उन् खनेर्मुट् इति पाठः स्यात्

भक्तस्तस्मै । भक्ताय मह्यमिति यावत् । धृ धारणे इत्यस्मात्, 'अर्तिस्तुसुहुसृधृभिक्षुभायापदियक्षिनीभ्यो मन्' (उ.सू. १.१४५) इति मन् प्रत्ययः । दृष्टये दर्शनार्थम् । दृशिर् प्रेक्षण इत्यस्माद्भावे क्तिन् । अपावृणु अपगतावरणं कुरु । तथा चोक्तं ब्रह्माण्डे-

'पात्रं हिरण्मयं सूर्यमण्डलं समुदाहृतम् ।
विष्णोः सत्यस्य तेनैव सर्वदाऽपिहितं मुखम् ।
तत्तु पूर्णत्वतः पूषा विष्णुर्दर्शयति स्वयम् ।
सत्यधर्माय भक्ताय' इति ॥ १५ ॥

## उपनिषत्

**पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन् ।**
**समूह तेजो यत् ते रूपं कल्याणतमं तत् ते पश्यामि ॥**
**योऽसावसौ पुरुषः सोऽहमस्मि ॥ १६ ॥**

## प्रभा

**पूषन्निति ।** हे पूषन् पूर्ण । पूषनामकसूर्यान्तर्गत । एकर्षे । एकः प्रधानः ऋषिर्ज्ञानं यस्येति व्युत्पत्या प्रधानज्ञानरूपत्वहेतुना एकर्षिशब्दवाच्यः सन् तन्नामकाथर्वणवेदद्रष्टृमुन्यन्तर्गत । 'यम' सर्वनियामकतया यमशब्दवाच्यः सन् यमान्तर्गत । 'सूर्य' सूरि-प्राप्यत्वहेतुना सूर्यशब्दवाच्यः सन् सूर्यान्तर्गत । सूरिशब्दोपपदाद् या प्राप्रणे इत्यस्मात् 'आतोऽनुपसर्गे क' इति (अष्टा. ३.१.३)

कप्रत्यये ककारलोपे कित्वादातो लोप इटि चेति धात्वाकारलोपे छन्दस्त्वादिकारलोपे सूर्येति रूपम् । प्राजापत्य प्रजापतेर्हिरण्य-गर्भस्य विशेषेण प्राप्यतया प्राजापत्यशब्दवाच्य । उक्तं च पूषादिशब्दवाच्यत्वमस्य तत्रैव-

'पूर्णत्वतः पूषा प्रधानज्ञानरूपतः ।
विष्णुरेकऋषिर्ज्ञेयो यमो नियमनाद्धरिः ।
सूर्यः स सूरिगम्यत्वात्प्राजापत्यः प्रजापतेः ।
विशेषेणैव गम्यत्वात् ...........................॥' इति ।

एतादृश हरे रश्मीन् मदीयस्वरूपज्ञानम् । व्यूह विस्तारय । तेजः मदीयबाह्यज्ञानं समूह विस्तारय । यद्वा तेज इति स्वरूपज्ञानं रश्मीनिति बाह्यज्ञानम् । तथा च बाह्यज्ञानं छेदय स्वरूपज्ञानं प्रकाशयेत्यर्थः । विस्तारे प्रयोजनमाह- **यत्त इति** ॥ ते तव कलिं दोषमाणयति गमयति दूरमिति कल्याणम् । अतिशयेन कल्याणं कल्याणतमम् । सर्वदा दोषरहितमित्यर्थः । यद्रूपं वर्तते तद्रूपं ते तव प्रसादादहं पश्यामि ।

अत्रेदं मन्त्रद्वयं सूर्यादिप्रार्थनापरमिति केचित् । तन्न । भगवत्साक्षात्कारार्थं भगवत्प्रार्थनाया एव प्रकृतत्वेन सूर्यादि-प्रार्थनाया अप्रकृतत्वात् ।

अपरे तु रश्मीन् आदित्यादिकिरणान् व्यूह अपगमय तेजः

त्वदीयस्वरूपतेजः समूह विस्तारयेति व्याकुर्वन्ति । तदसङ्गतम् । ज्ञानिनः परमात्मसाक्षात्कारस्य मानसिकत्वेन परमात्मविषयक-बाह्यचक्षुर्दर्शनप्रतिबन्धकीभूतादित्यकिरणानां तं प्रत्यप्रतिबन्धक-त्वेन प्रकृतानुपयोगात् । अस्माकं तु भगवत्साक्षात्कारं प्रति जीवीय वैषयिकज्ञानस्य प्रतिबन्धकत्वेन जीवीयस्वरूपज्ञानस्य कारणत्वेन च रश्मीन् व्यूहेत्यस्य मदीयवैषयिकज्ञानानि छेदयेति तेजः समूहे-त्यस्य मदीयस्वरूपज्ञानं विस्तारयेत्यर्थो युक्तः । अथवा रश्मितेजः-शब्दयोः स्वरूपबाह्यज्ञानार्थकत्वपक्षे रश्मीन् स्वरूपज्ञानानि व्यूह विस्तारय तेजः बाह्यविषयज्ञानं समूह आकर्षय मदीयवैषयिक-ज्ञानप्रसरणेन[३६] कुर्वित्यर्थः ॥

अथ पूषादिशब्दैः परमात्मनोऽनेकप्रतीकस्थितत्वमुक्तम् । तत्स्थस्य प्रार्थनाकर्तृस्थितस्य च भेदशङ्कायामभेद इत्याह-**योऽसाविति** ॥ असावसाविति वीप्सा । पूषादिसर्वप्रतीकस्थितः पुरुषः पूर्णत्वपालकत्वहेतुना पुरुषशब्दवाच्यः सन् पुरुषाभिधेय-सर्वजीवस्थितः यः स परमात्मा अहम् अस्मि मदन्तर्यामितया अस्तीत्यर्थः । पृ पालनपूरणयोरित्यस्मात् 'पुरः कुषन्' इति कुषन् प्रत्ययः । 'जीवे पुरुषमुद्गलौ' इत्यभिधानं च । अहं पदस्य प्रत्यगात्मजीवान्तर्यामिणि मुख्यतया तत्समभिव्याहारेणास्मी-

---

३६. ...ज्ञानापसरणम् इति स्यात् ।

त्युत्तमपुरुषप्रयोगोऽपि साधुः । तथा च सर्वप्रतीकस्थस्य मयि स्थितस्य च विष्णोर्भेदो नास्तीत्यर्थः ।

अत्र केचित्- 'ननु लोके स्वभिन्नस्यैव प्रार्थनायाः कर्तव्यत्वेन प्रसिद्ध्या परमात्मजीवयोरपि भेद उक्त इति चेन्नेत्याह- **योऽसाविति** ॥ असौ असौ पूषादिसर्वात्मा पुरुषः सर्वजीवात्मा यः सः परमात्मा अहमस्मि । तथा च प्रार्थनाकर्तुर्मम पूषादि-सर्वात्मकस्य भेदो नास्तीत्यर्थ' इत्याहुः । तन्न । स्वस्यैव ब्रह्म-स्वरूपत्वेन ब्रह्मसाक्षात्कारार्थं क्रियमाणायाः प्रार्थनायाः स्वविषय-कत्वलाभेन तदनुपयोगात् । न च व्यावहारिकभेदमाश्रित्य प्रार्थनोपपत्तिरिति वाच्यम् । प्रार्थना तु पारमार्थिकी किमुत व्यावहारिकी । नाद्यः । पारमार्थिकभेदस्यैवाभावेन पारमार्थिक-प्रार्थनाया अपि वैय्यर्थ्यात् । न द्वितीयः । भवन्मते व्यावहारिकस्य सर्वस्यापि मिथ्यात्वाङ्गीकारेण प्रार्थनाया अपि मिथ्यात्वसिद्ध्या मिथ्याभूतप्रार्थनायाः प्रकृतकार्यसाधकत्वाभावेन वैय्यर्थ्यात् । मिथ्यार्थप्रतिपादकत्वेनोपनिषदोऽपि वैयर्थ्यापाताच्चेति दिङ्मात्रं प्रदर्शितम् ॥ १६ ॥

### उपनिषत्

**वायुरनिलममृतमथेदं भस्मान्तꣳ शरीरम् ॥**
**ॐ३ क्रतो स्मर कृतꣳ स्मर क्रतो स्मर कृतꣳ स्मर ॥ १७ ॥**

**प्रभा**

ननु 'यत्ते रूपं कल्याणतमम्' इत्यनेन परमात्मनो निर्दोषत्वमुक्तम् । सोऽहमस्मीत्यनेन जीवान्तर्गतत्वमप्युक्तम् । प्रत्यक्षत एव देहस्य भस्मान्तत्वदर्शनेन देहनाशे सति तदन्तर्गतस्यापि जीववन्मरणदुःखादिदोषोऽस्ति किमित्याशङ्कायां कैमुत्येन तां परिहरति- **वायुरित्यादिना** ।। यद्यपि इदं शरीरं भस्मान्तं तथाऽपि तदन्तर्गतस्य हरेः न मरणादिदोषप्रसक्तिरस्तीति शेषः । कुत इति चेदाह- **वायुरिति** ।। अः ब्रह्मैव निलमाश्रयो यस्येत्यनिलः परमेश्वरमाश्रित इत्यर्थः । वायुः मुख्यप्राणोऽपि यदा अमृतं मुक्तः नित्यश्च अथ तदा परमेश्वरोऽमृत इति किं वक्तव्यमिति शेषः । अनिलामृतपदयोर्लिङ्गव्यत्ययो विभक्तिव्यत्ययो वा कार्यः । अथवा शरीरं देहः भस्मान्तं भस्म अन्ते यस्येति व्युत्पत्या विनाशविशिष्टम् । भवतु इति शेषः । अथेति हेत्वर्थे । 'अथो अथ समुच्चये । मङ्गलानन्तरारम्भप्रश्नहेत्वर्थकेषु च' इत्यभिधानात् । अथ यस्मात् अनिलं निरुक्तव्युत्पत्त्या परब्रह्माश्रितो वायुः मुख्यप्राणः अमृतं नित्यः तस्मात् कारणात् इदं जीवान्तर्यामि परं ब्रह्म अमृतं नित्यं मुक्तं च । तथा च सर्वजीवोत्तमो वायुरपि यदाश्रयणेन अमृतः तस्मादिदं ब्रह्म अमृतमिति किमु वक्तव्यमिति भावः । अमृतमित्यभ्यासः । लिङ्गव्यत्ययादिकं पूर्ववत् । वायोरमृतत्वं तु नित्यज्ञानत्वेन ज्ञेयम् । 'अतिरोहितविज्ञानाद्वायुरप्यमृतः स्मृतः ।

मुख्यामृतः स्वयं रामः परमात्मा सनातनः' इति रामसंहितायामुक्तेः ॥

यद्वा परमात्मसाक्षात्काराय मोक्षाय च सर्वजीवोत्तम-वायुप्रतीकस्थत्वेन परमात्मज्ञानमावश्यकमित्याह- **योऽसाविति ॥** अथेत्यानन्तर्यार्थे । अथ पूषादिगतभगवत्प्रार्थनानन्तरम् । असौ पूषाद्यन्तर्गतः यः परमेश्वरः पुरुषः पूर्णः सः परमात्मा वायुः वाति सर्वं जानातीति वः । 'वा गतिगन्धनयोः' इत्यस्मात्कप्रत्ययः । कित्वादातो लोप इटि चेति धात्वाकारलोपः । आ समन्ता-देतीत्यायुः । आ इत्युपसर्गपूर्वकात् इण्गतावित्यस्मादिणः छन्दसी-त्युण् प्रत्ययः । वश्चासावायुश्चेति वायुः । सर्वज्ञत्वसदागति-मत्त्वहेतुभ्यां वायुशब्दवाच्यः सन् असौ असुशब्दाभिधेये मुख्यप्राणे वर्तत इति शेषः । न हीयते इत्यहमिति व्युत्पत्त्या अहेयत्वहेतुना अहंशब्दवाच्यम् । अहमित्यदन्तं नपुंसकं द्वितीयैकवचनम् । एवमग्रेऽपि । 'अस्मि नित्यास्तितामानात्' इत्युक्तेर्नित्यसत्ता-सर्वसाक्षित्वाभ्यामस्मीति शब्दवाच्यम् । अस भुवि माङ् माने इत्यस्मात्क्तिप्रत्यये ककारलोपे कित्वात् 'आतो लोप इटि च' इति द्वितीयधात्वाकारलोपे अस्मीति रूपम् । इदन्तं नपुंसकम् । तिङ्प्रतिरूपकाव्ययमिति राघवेन्द्रश्रीमच्चरणाः । अनिलं न विद्यते

इला भूः स्थानभूता यस्येत्यनिलम् । स्वस्यैव सर्वाश्रयत्वेन स्वस्यान्याश्रयणरहितमित्यर्थः । अमृतं नित्यमुक्तम् । भस्मान्तं भास्यते स्वयंभातुमशक्तत्वात् परमात्मना प्रकाश्यत इति भस्म जगत् । भासृ दीप्तावित्यस्मात्सर्वधातुभ्यो मनिनिति मनिन् प्रत्ययः। भादित्वादकारलोप इति लोलुठः । तस्य अन्तं स्थितिः येन तत् भस्मान्तम् । जगत्स्थितिकर्तृ इत्यर्थः । शीर्यते नश्यते जगदनेनेति शरीरम् । शृ विदारण इत्यस्मात् 'कृशृगृपूकटिपटिशोटिभ्य ईरन्' इति ईरन् प्रत्ययः । संहारकर्तृत्वहेतुना शरीरशब्दवाच्यम् । इदं सर्वसमीपस्थत्वेन इदंशब्दवाच्यं ब्रह्म । इं सम्पदं ददाति भक्तानामिति इदं शब्दवाच्यं वा ब्रह्म । पश्यामीत्यस्य पश्येदिति लकारव्यत्ययेनान्वयः । पश्यामीति यथास्थितेन वान्वयः ॥

अथ प्रणवप्रतीकप्रार्थनामाह- **ओमिति** ॥ 'ओतमत्र जगद्यस्मादोन्तस्माद्भगवान् हरिः' इत्युक्तेर्जगदाधारत्वहेतुना ओङ्कारवाच्य क्रतो ज्ञानरूप । 'स क्रतुर्ज्ञानरूपत्वात्' इति वचनात् । स्मर अनुगृहाणेत्यर्थः । मामिति शेषः । कृतं मदीयध्यानादिकं कर्म । स्मर । मया कृतेन ध्यानादिना मय्यनुग्रहोन्मुखो भवेत्यर्थः । उक्तं च ब्रह्मतर्के-

'भक्तानां स्मरणं विष्णोर्नित्यज्ञप्तिस्वरूपतः ।
अनुग्रहोन्मुखत्वं तु नैवान्यत्क्वचिदिष्यते ॥' इति ।

अभ्यासस्त्वादरार्थः ॥ १७ ॥

**उपनिषत्**

**अग्ने नय सुपथा राये अस्मान्**
**विश्वानि देव वयुनानि विद्वान् ।**
**युयोध्यस्मज्जुहुराणमेनो**
**भूयिष्ठां ते नम उक्तिं विधेम ॥ १८ ॥**

*॥ इति याज्ञीयोपनिषत् ॥*

**प्रभा**

अथ प्राप्तसाक्षात्कारेणापि पुंसा मोक्षार्थं भगवत्प्रार्थना कार्येति भावेनाग्निप्रतीकस्थभगवत्प्रार्थनाप्रकारमाह- **अग्ने नयेति** ॥ हे अग्ने 'अग्निरङ्गप्रणेतृत' इत्युक्तेः अङ्गं शरीरम् अप्रधानं जगद्वा नयतीति व्युत्पत्या जगत्प्रेरकत्वहेतुना अग्निपदमुख्यार्थः सन्नग्निशब्दाभिधेय वह्न्यन्तर्गत हरे । अस्मान् सुपथा पुनरावर्तिरहितेनार्चिरादिमार्गेण राये मोक्षाख्यवित्ताय नय प्रापय । कुत इति चेदाह- **विश्वानीत्यादि** ॥ हे देव क्रीडादिगुणविशिष्ट । दिव् क्रीडाविजिगीषेत्यस्माद् घञ् । विश्वानि पूर्णानि । मोक्षाय पर्याप्तानीति यावत् ।

वयुनानि अस्मदीयज्ञानानि । अय पयेत्यादिना गत्यर्थकादयधातोः अयतेरुनन्नादेर्वश्चेत्यनेनोनन्प्रत्यय आद्यकारस्थाने वकारादेशश्च । त्वं विद्वान् ज्ञाता । विद् ज्ञाने इत्यस्मात्कर्तरि क्वसुन्प्रत्ययः । यस्मात्त्वं मोक्षसाधनीभूतमदीयज्ञानानि वेद तस्मादस्मान्मोक्षाख्य-वित्तं प्रापयेति भावः । ननु प्रारब्धकर्मबद्धस्य कथं मोक्ष इत्यत आह- **युयोधीत्यादिना** ॥ अस्मानित्यस्यानुषङ्गः । अस्मान् जुहुराणम् अल्पीकुर्वत् । संसारे परिवर्तयदिति यावत् । एनः पापम्, अनिष्टं कर्मेति यावत् । अस्मत् । विश्लेषावधित्वाद् 'ध्रुवमपायेऽपादानम्' इति पञ्चमी । युयोधि वियोजय । अत्र हेतुमाह- **भूयिष्ठामित्यादिना** । ते तुभ्यं भूयिष्ठां भक्तिज्ञानोपेत-तया बह्वीं नमः इत्युक्तिं विधेम कुर्मः । विधेमेत्युत्तमपुरुषप्रयोगेन वयमिति कर्तृवाचकपदमर्थाल्लब्धम् । त्वामेवानुसरामः, न तु त्वत्प्रतीपं कुर्म इति भावः । अयमेवार्थः स्कान्दे उक्तः-

'यदस्मान् कुरुतेऽत्यल्पांस्तदेनोऽस्मद्वियोजय ।
नय नो मोक्षवित्तायेत्यस्तौद्यज्ञं मनुः स्वराट् ॥'इति ॥ १८ ॥

'आदावन्ते च शान्तिस्तु पठनीया शुभेच्छुभिः' इत्युक्तेरादा-विवान्तेऽपि शान्तिं पठति- **पूर्णमद इति** ॥

पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥
ॐ शान्तिः शान्तिः शान्तिः ॥

अथाध्यापकाः न्यूनाधिकभ्रमनिरासाय ग्रन्थसङ्ख्यामाहुः[३७] xxx अक्षरसङ्ख्यामप्याहुः । षष्ट्यन्तषट्शतानीति । षष्ट्युत्तरषट्-शतानीत्यर्थः ॥

कृष्णशर्मा कविश्चक्रे याज्ञीयोपनिषत्प्रभाम् ।
शीघ्रार्थबुद्धये तेन प्रियेतां [३८]मध्वमाधवैः ॥ १ ॥

**॥ श्रीमद्घटिकाशताष्टभाषासरसपद्यकवितारचन[३९]धुरीणस्योपनिषद्रहस्य-दृश्वनो गुहपुर[४०]वासिनः कृष्णावधूतशर्मणः कवेः कृतौ याज्ञीयोपनिषत्प्रभा समाप्ता ॥**

---

३७. अत्र ग्रन्थपातः सम्भाव्यते । वाक्यानि चैवं स्युः- अत्राहत्याष्टादश मन्त्राः । अशीतिश्च मन्त्राः । अशीतिश्च द्वे शते च पदानि (२८०) । काण्वपाठे त्वेकाशीतिः (२८१) शान्तिमन्त्रेण सह अष्टौ नवतिश्च द्वे शते च (२९८) । काण्वपाठे नवनवतिश्च (२९९) । त्रिंशच्च षट् शतानि चाक्षराणि (६३०) । शान्तिमन्त्रेण सहाष्टचत्वारिंशच्च षट् शतानि च (६४८) ।

३८. मध्वमाधवौ ३९. चरण ४०. वासशर्मणः

# PUBLICATIONS OF POORNAPRAJNA SAMSHODHANA MANDIRAM

| | | |
|---|---|---|
| 1. Upanishadbhashyam | *Prof. D.Prahladacharya* | (Under print) |
| 2. Gita Bhashyam (Chpts. 1-2) | *Prof. D.Prahladacharya* | Rs. 150/- |
| 3. Tatvodyota Prakaranam | *Prof. A .Haridasa Bhat* | Rs. 75/- |
| 4. Vishnutatvavinirnaya *Part-I* | *Prof.A.Haridasa Bhat* | Rs. 250/- |
| 5. Vishnutatvavinirnaya *Part-II* | *Prof.A.Haridasa Bhat* | Rs. 250/- |
| 6. Bharatiya Darshaneshu Prathyaksha Swaroopam | *P.V. Upadhyaya* | Rs. 50/- |
| 7. Shrimad Bhagavatham | *Pt. P.S.Sheshagiri Acharya* | (Under print) |
| 8. Panchalakshani | *Prof. A. Haridasa Bhat* | Rs. 75/- |
| 9. Sarvamula Shabda Nighantu | *Pt. Ranganatha Katti*<br>*Pt. Shankaranarayana Adiga* | Rs. 250/- |
| 10. Subhashitani | *Dr. A.V. Nagasampige* | Rs. 20/- |
| 11. Shrutisiddhantasangraha | *Dr. A.V. Nagasampige* | Rs. 140/- |
| 12. Laghuramayanam | *Pt. P.V. Upadhyaya* | Rs. 20/- |
| 13. Kavyanavanita and Kavyalakshana Sangraha | *Pt. Sankaranarayana Adiga* | Rs. 20/- |
| 14. Alankarasutrabhashyam - | *Pt. Ranganatha Katti* | Rs. 20/- |
| 15. Pramana Sangrahah | *Dr. A.V. Nagasampige* | Rs. 30/- |
| 16. Shesha Tatparya Chandrika | *Prof. D. Prahlada Char* | Rs. 250/- |
| 17. Mukti Tattvam | *Dr. V.N. Pandurangi* | Rs. 40/- |
| 18. 'Anandatirtha' A CD-ROM<br>(CD-ROM on Life & Teaching of Sri Madhva) | - | Rs. 250/-<br>($ 30) |